| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अमरकोश द्वितीयकांड | – | दर्शन | पुर्ण | – | 7/12 | ~~96~~ 22 | संस्कृत | कागद | 11 | 66 | | |

M- 2914

अ॰ को॰
१

श्रीगणेशायनमः॥ ॥अथद्वितीयकांडटिप्पणप्रारंभः॥ ॥भूमि[1]नामानि ३१ मृत्तिका[2]नाम २ प्रशस्त[3]मृत्तिका ३ सर्वधान्यो[4]पयोगीमृत्तिका २ क्षारमृत्ति[5]कानाम २ उखरमृत्ति[6]कानाम २ स्थूल[7]नाम २ मारवाड[8] देश २ अल्प[9]क्षेत्र २ कवन[10]नाम ५ जंबूद्वीप[11]नाम २ प्राचीसहित[12]दक्षिणदेश शिष्टाचार[13]रहितदेशनाम २ मध्यदेश[14]नाम २ पुण्यदेश[15]नाम २ जनैर्वास्य[16]मानदेशमगधादि २ सामान्य[17]देशनाम ३ नर्द्दब-

श्रीगणेशायनमः॥ वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः॥ नृब्रह्मक्षेत्रविट्शूद्रैः सांगोपांगैरिहोदिताः॥१॥ भूर्भूमिरचलानंतारसाविश्वंभरास्थिरा॥ धराधरित्रीधरणिः क्षोणीज्याकाश्यपीक्षितिः॥२॥ सर्वंसहावसुमतीवसुधोर्वीवसुंधरा॥ गोत्राकुः पृथिवीपृथ्वीक्ष्मावनिर्मेदिनीमही॥३॥ भूतधात्रीरत्नगर्भाविपुलासागरांबरा॥ मृन्मृत्तिकाप्रशस्तातुमृत्सामृत्स्नाचमृत्तिका॥४॥ उर्वरासर्वसस्याढ्यास्यादूषःक्षारमृत्तिका॥ ऊषवानूषरौद्वावप्यन्यलिंगौस्थलंस्थली॥५॥ समानौमरुधन्वानौद्वेखिलाप्रहितेसमे॥ त्रिष्वथोजगतीलोकोविष्टपंभुवनंजगत्॥६॥ लोकोयंभारतंवर्षंशरावत्यास्तुयोवधेः॥ देशःप्राग्दक्षिणःप्राच्याउदीच्यःपश्चिमोत्तरः॥७॥ प्रत्यंतोम्लेच्छदेशःस्यान्मध्यदेशस्तुमध्यमः॥ आर्यावर्तःपुण्यभूमिर्मध्यंविंध्यहिमागयोः॥८॥ नीवृज्जनपदोदेशविषयौतूपवर्तनं॥ त्रिष्वागोष्ठान्नडप्रायेनड्वान्नड्वलइत्यपि॥९॥ कुमुद्वान्कुमुदप्रायेवेतस्वान्बहुवेतसे॥ शाड्वलःशादहरितेसजंबालेतुपंकिलः॥१०॥ जलप्रायमनूपंस्यात्पुंसिकच्छस्तथाविधः॥ स्त्रीशर्करशर्करिलःशार्करःशर्करावति॥११॥ देशएवादिमाएवमुन्नेयाःसिकतावति॥ देशोनद्यंबुवृष्ट्यंबुसंपन्नव्रीहिपालितः॥१२॥ स्यान्नदीमातृकोदेवमातृकश्चयथाक्रमं॥ सुराज्ञिदेशेराजन्वान्स्यात्ततोन्यत्रराजवान्॥१३॥

[18]हुलदेश २ बहुवेतस[19]देशनाम नीलतृण[20]नाम ३ कर्दमयुक्त[21]देश जलाधिकदेश[22]नाम वालुका[23]नाम शर्करायुक्त[24]देश २ नदीमातृक[25]जलदेश २ देवमातृक[26]देवःमेघःमातायस्य २ सुराज[27]देश सामान्य[28]राजदे-

द्वि॰ कां॰
१

गोस्थान २ तद्गोष्ठंभूतपूर्वकंचेत्गोष्ठीनं. नद्यादिसमीपभूमिनाम २ पूलनाम २ वारुकनामानि ३ मार्गनामानि १२ शोभनमार्गनामानि ३ कुत्सितमार्ग ५ अमार्ग २ एकत्रमार्गचतुष्टयनामचवादाम
सिद्ध १० छायाजलादिवर्जितदूरमार्ग. दुर्गममार्गनामानि क्रोशद्वयनामानि हस्तचतुःशतनाम राजमार्ग. पुरसमीपराजमार्ग १ आकाशपृथ्वी. स्वर्गभूमिनाम. क्षारसमुद्रनाम ३ नगरनामानि ७

गोष्ठंगोस्थानकंतत्तुगौष्ठीनंभूतपूर्वकं॥ पर्यंतभूः परिसरः सेतुरालौस्त्रियांपुमान्॥१४॥ वामलूरश्चनाकुश्चवल्मीकंपुंनपुंसकं॥ अयनंवर्त्ममार्गाध्वपंथानःप
दवीसृतिः॥१५॥ सरणिःपद्धतिःपद्यावर्त्मन्येकपदीतिच॥ अतिपंथाःसुपंथाश्चसत्पथश्चार्चितेध्वनि॥१६॥ व्यध्वोदुरध्वोविपथःकदध्वाकापथःसमाः॥ अ
पंथास्त्वपथंतुल्येशृंगाटकचतुष्पथे॥१७॥ प्रांतरंदूरशून्योध्वाकांतारंवर्त्मदुर्गमं॥ गव्यूतिःस्त्रीक्रोशयुगंनल्वःकिष्कुचतुःशतं॥१८॥ घंटापथःसंसरणंत
त्पुरस्योपनिष्करं॥ द्यावापृथिव्यौरोदस्यौद्यावाभूमीचरोदसी॥१९॥ दिवस्पृथिव्यौगुंजातुरुमास्याल्लवणाकरः॥ ॥इतिभूमिवर्गः॥ ॥पूःस्त्रीपुरीन
गर्यौवापत्तनंपुटभेदनं॥ स्थानीयंनिगमोन्यत्तुयन्मूलनगरात्पुरं१ तच्छाखानगरंवेशोवेश्याजनसमाश्रयः॥ आपणस्तुनिषद्यायांविपणिःपण्यवी
थिका॥२॥ रथ्याप्रतोलीविशिखास्याच्चयोवप्रमस्त्रियां॥ प्राकारोवरणःशालःप्राचीनंप्रांततोवृतिः॥३॥ भित्तिःस्त्रीकुड्यमेडूकंयदंतर्न्यस्तकीकसं
॥गृहंगेहोदवसितंवेश्मसद्मनिकेतनं॥४॥ निशांतपस्त्यसदनंभवनागारमंदिरं॥ गृहाःपुंसिचभूम्न्येवनिकाय्यनिलयालयाः॥५॥ वासःकुटीद्वयोः
शालासभासंजवनंत्विदं॥ चतुःशालंमुनीनांतुपर्णशालोटजोस्त्रियां॥६॥ राजधानी ७ वेश्यावासस्थान २ हट्टनामबाजार २ हट्टमार्गना. २ ग्राममध्यमार्गना. ३ कोटमा
र्गना. ३ कोटनामानि ३ ग्रामादेरंतेकंटकादिवेष्टननाम भित्त. अंतर्न्यस्तानिअस्थिनियच. गृहनामानि १६ तृणादिनिर्मित. शाला. हे अन्योन्याभिमुखशालाचतुष्कस्यचौसोपीम. मुनिगृह २

यज्ञायतन २ अश्वशाळापागा २ दुकानसेर्णकारइ० २ जलशालापोही २ शिष्ययतिवासगृह २ मद्यसंधानगृह २ गृहमध्यभाग २ गवाक्ष २ जनाश्रयमंडप २ धनिकगृह॰ देवनृपवासस्थान. सामान्यराजगृह पटमंडपा
दिराजसदनस्य॰ ईश्वरगृहविशेषस्य ३ राजस्त्रीगृह ४ गैंची ५ द्वारमकोष्ठ बहिर्द्वाराग्रपर्णिनतुष्कस्य ओंटाम॰ ३ उंबरा २ आंगण ३ द्वारोपरिस्थितकाष्ठस्य गणेशपट्टी मसि॰ द्वेरिवैडकी २ परसैवान्वेद्वार २

स्यान्

चैत्यमायतनंतुल्येवाजिशालातुमंदुरा॥ आवेशनंशिल्पिशालाप्रपापानीयशालिका॥७॥ मठश्छात्रादिनिलयोगंजातुमदिरागृहं॥ गर्भागारंवासगृहमरिष्टंसूतिकागृहं॥८॥ वातायनंगवाक्षोऽथमंडपोऽस्त्रीजनाश्रयः॥ हर्म्यादिधनिनांवासः प्रासादोदेवभूभुजां॥९॥ सौधोऽस्त्रीराजसदनमुपकार्योपकारिका॥ स्वस्तिकःसर्वतोभद्रोनंद्यावर्तादयोपिच॥१०॥ विच्छंदकःप्रभेदाहिभवंतीश्वरसद्मनां॥ स्त्र्यगारंभूभुजामंतःपुरंस्यादवरोधनं॥११॥ शुद्धांतश्चावरोधश्चस्यादट्टःक्षौममस्त्रियां॥ प्रघाणप्रघणालिंदाबहिर्द्वारप्रकोष्ठके॥१२॥ गृहावग्रहणीदेहल्यंगणंचत्वराजिरे॥ अधस्ताद्दारुणिशिलानासादारूपरिस्थितं॥१३॥ प्रच्छन्नमंतर्द्वारंस्यात्पक्षद्वारंतुपक्षकं॥ वलीकनीध्रेपटलप्रांतेऽथपटलंछदिः॥१४॥ गोपानसीतुवलभीछादनेवक्रदारुणि॥ कपोतपालिकायांतुविटंकंपुंनपुंसकं॥१५॥ स्त्रीद्वार्द्वारंप्रतीहारःस्याद्वितर्दिस्तुवेदिका॥ तोरणोऽस्त्रीबहिर्द्वारंपुरद्वारंतुगोपुरं॥१६॥ कूटंपूर्द्वारियद्धस्तिनखस्तस्मिन्नथत्रिषु॥ कपाटमररंतुल्येतद्विष्कंभोऽर्गलंनना॥१७॥ आरोहणंस्यात्सोपानंनिश्रेणिस्त्वधिरोहिणी॥ संमार्जनीशोधनीस्यात्संकरोऽवकरस्तथा॥१८॥ क्षिप्तेमुखंनिःसरणंसन्निवेशोनिकर्षणं॥ समौसंवसथग्रामौवेश्मभूर्वास्तुरस्त्रियाम्॥१९॥ ग्रामांतउपशल्यंस्यात्सीमसीमेस्त्रियामुभे॥ देवळचणप्रांत २ शाकार २ मोहटी॰ पक्षि

२

गृह॰ द्वार॰ ३ ओंटा २ तोरण॰ नगरद्वार॰ नगरद्वारेअवतरणार्थमृत्कूटस्य॰ कवाड॰ आडसर॰ पायऱ्या २ निसर्ण २ केरसुण्या २ केर २ पुढीलदार २ समीचीननिवासस्थान २ गांव २ गृहरचनोवच्छिन्नभूमि ग्रामसमी पप्रदेश॰ सीमो २

गवळ्यांचागांव. भिल्लगृह. त्रयोदशपर्वतस्य. भूमीसंआकारपर्वत २ त्रिकूटपर्वत २ अस्ताचल. उदयाचल. हिमाचलादिसातपर्वत. मलयचित्रकूटमंदारादि. पाषाण ७ पर्वताग्रस्य ३ पर्वतातूनपतनस्थान
स्य. पर्वतमध्यभाग. पर्वतावरीलसपाटभूमि ३ पाणथळजमीन २ झरे ३ गुहा ४ पर्वतावरूनपडणारेमोठेंधोंडे. खाण २ पर्वतांच्यासमीपलहानपर्वत. पर्वताच्याखालचीभूमि. पर्वताच्यावरीलभूमि. धातु

घोषआभीरपल्लीस्यात्पक्कणःशबरालयः॥२०॥ ॥इतिपुरवर्गः॥ ॥महीध्रेशिखरिक्ष्माभृदहार्यधरपर्वताः॥अद्रिगोत्रगिरिग्रावाचलशैल
शिलोच्चयाः॥२१॥लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ॥अस्तस्तुचरमक्ष्माभृदुदयःपूर्वपर्वतः॥२॥हिमवान्निषधोविंध्योमाल्यवान्पारि
यात्रकः॥गंधमादनमन्येचहेमकूटादयोनगाः॥३॥पाषाणप्रस्तरग्रावोपलाश्मानःशिलादृषत्॥कूटोस्त्रीशिखरंशृंगंप्रपातस्त्वतटोभृगुः॥४॥कट
कोस्त्रीनितंबोद्रेःस्नुःप्रस्थःसानुरस्त्रियां॥उत्सःप्रस्रवणंवारिप्रवाहोनिर्झरोझरः॥५॥दरीतुकंदरोवास्त्रीदेवखातबिलेगुहा॥गव्हरंगंडशैलास्तुच्यु
ताःस्थूलोपलागिरेः॥६॥खनिःस्त्रियामाकरःस्यात्पादाःप्रत्यंतपर्वताः॥उपत्यकाद्रेरासन्नाभूमिरूर्ध्वमधित्यका॥७॥धातुर्मनःशिलाद्यद्रेर्गैरिकंतुवि
शेषतः॥निकुंजकुंजौवाक्लीबेलतादिपिहितोदरे॥८॥ ॥इतिशैलवर्गः॥ ॥अटव्यरण्यंविपिनंगहनंकाननंवनं॥महारण्यमरण्यानीगृहारामास्तु
निष्कुटाः॥१॥आरामःस्यादुपवनंकृत्रिमंवनमेवयत्॥अमात्यगणिकागेहोपवनेवृक्षवाटिका॥२॥पुमानाक्रीडउद्यानंराज्ञःसाधारणंवनं॥स्यादेत
देवप्रमदवनमंतःपुरोचितं॥३॥वीथ्यालिरावलिःपंक्तिःश्रेणीलेखास्तुराजयः॥वन्यावनसमूहेस्यादंकुरोभिनवोद्भिदि॥४॥ वेलीनेआच्छादितस्थान २ अरे
ण्य ६ मोठेंअरण्य २ गृहाजवळकेळबाग. उपवन २ अमात्यआणिगणिकायांचेंगृहोपवन. राजांचेंक्रीडार्थवन. राणीसंक्रीडेविषयींयोग्य. पंक्तीसोतराजशाविभपंक्ति ५ निरंतरपंक्तीजशीभस्मलेखा.
नूतनेंअंकुरोहे.

शी:

वृक्षस्य१३जासेफळेंयेतातनोवृक्ष॰पुष्पोवांचूनफळेंयेतातनोवृक्ष॰फळेंयेतांनांचसुकतातनोवृक्ष॰यथाकोळफळेंधारणकरितात॰फळेंरहितवृक्ष॰३सफळवृक्षाचीं३पुष्पितवृक्षाची२छिन्नवृक्षाची
२ज्यांच्याशाखांद्यावमुळेंआंरवूडयेतातनोवृक्ष॰जांसरैखांद्यानाहींत२वेलीचीं३विस्तृतलता३वृक्षादिकांचेंउच्चत्व३मूळेंखांद्यायांचाआंतीलभाग॰शेंरवेचीं२प्रथमउत्पन्नशाखा॰मूळांचीं२पा

वृक्षोमहीरुहःशाखीविटपीपादपस्तरुः॥ अनोकहःकुटःशालःपलाशीद्रुद्रुमागमाः॥५॥ वानस्पत्यःफलैःपुष्पात्तैरपुष्पाद्वनस्पतिः॥ ओषध्यःफलपा
कांताःस्यादवंध्यःफलेग्रहिः॥६॥ वंध्योऽफलोवकेशीचफलवान्फलिनःफली॥ प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः॥७॥ फुल्लश्चैतेविकसितेस्युर
वंध्यादयस्त्रिषु॥ स्थाणुरस्त्रीध्रुवःशंकुर्ह्रस्वशाखाशिफःक्षुपः॥८॥ अप्रकांडेस्तंबगुल्मौवल्लीतुव्रततिर्लता॥ लताप्रतानिनीवीरुद्गुल्मिन्युलप
इत्यपि॥९॥ नगाद्यारोहउच्छ्रायउत्सेधश्चोच्छ्रयश्चसः॥ अस्त्रीप्रकांडःस्कंधःस्यान्मूलाच्छाखावधिस्तरोः॥१०॥ समेशाखालतेस्कंधशाखाशालेशि
फाजटे॥ शाखाशिफावरोहःस्यान्मूलाच्चाग्रंगतालता॥१२॥ शिरोग्रंशिखरंवानामूलंबुध्नोंघ्रिनामकः॥ सारोमज्जासमौत्वक्स्त्रीवल्कंवल्कलमस्त्रि
यां॥१३॥ काष्ठंदार्विंधनंत्वेधइध्ममेधःसमित्स्त्रियां॥ निष्कुहःकोटरंवानावल्लरीमंजरीस्त्रियौ॥१४॥ पत्रंपलाशंछदनंदलंपर्णंछदःपुमान्॥ पल्ल
वोस्त्रीकिसलयंविस्तारोविटपोस्त्रियां॥१५॥ वृक्षादीनांफलंसस्यंवृंतंप्रसवबंधनम्॥ आमेफलेशलाटुःस्याच्छुष्केवानमुभेत्रिषु॥१६॥ क्षारकोजालकंक्ली
बेकलिकाकोरकःपुमान्॥ स्याद्गुच्छकस्तुस्तबकःकुड्मलोमुकुलोस्त्रियां॥१८॥ रवी२वृक्षादिकांचेंमूळ३गाभानार२सालीचीं॰काष्ठमात्रादिशफ्कवृणकाष्ठादिकांचीं५वृक्षगतको
टर२केसर२पानांचीं६पाल्याचीं२शाखापल्लवादिसमुदायलक्षणआभोगः वृक्षादिकांचेंफळ॰देटबंधनंफलयोर्वृंतंमहाकायः कच्चेंफळ॰वाळलेलेंफळ॰नूतनेंकळी२कळी२घोंस२थोडीशीफुल्लेलीकळी–

पुष्पांची ५ पुष्पांतील मध २ पुष्परेणु. पुल्लिंगस्त्रीलिंगहीन म्हणजे नपुंसकीं. कोशातकी कर्कटकी द्राक्षा. अश्वत्थफल. वेळूचें फळ. प्लक्षाचें फळ. वटाचें फळ. इंगुदीवृक्षाचें फळ. डोर्ली. जांबूळ ३ जात्यापुष्पं.
व्रीहीणां फलानि. विदार्यौ: मूलविदारि. पाटलयोः पुष्पं पाटलं. पिंपळाची ५ कंवठाची. उंबराची ४ कांचनाची. सातवेणाची ४ बाहव्याची ८ जांभेराची ५ वायवर्णा ५ उंडीणीची ५ कडुनिंबाची ४ तिवं-

धै

स्त्रियां सुमनसः पुष्पं प्रसूनं कुसुमं सुमं ॥ मकरंदः पुष्परसः परागः सुमनोरजः ॥१७॥ द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ॥ आश्वत्थवैण
वप्लाक्षनैयग्रोधैङ्गुदं फले ॥१८॥ बार्हतं च फले जंब्वा जंबूः स्त्री जंबु जांबवं ॥ पुष्पे जातिप्रभृतयः स्वलिंगा व्रीहयः फले ॥१९॥ विदार्याद्यास्तु मूलेपि पु
ष्पे क्लीबेपि पाटला ॥ बोधिद्रुमश्चलदलः पिप्पलः कुंजराशनः ॥२०॥ अश्वत्थे थ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ॥ तस्मिन्दधिफलः पुष्पफलदंतशठा
वपि ॥२१॥ उदुंबरे जंतुफलो यज्ञांगो हेमदुग्धकः ॥ कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥२२॥ सप्तपर्णो विशालत्वक्शारदो विषमच्छदः ॥ आरग्व
धे राजवृक्षशम्याकचतुरंगुलाः ॥२३॥ आरेवतव्याधिघातकृतमालसुवर्णकाः ॥ स्युर्जंबीरे दंतशठजंभजंभीरजंभलाः ॥२४॥ वरुणो वरुणः सेतु-
स्तिक्तशाकः कुमारकः ॥ पुन्नागे पुरुषस्तुंगः केसरो देववल्लभः ॥२५॥ पारिभद्रे निंबतरुर्मंदारः पारिजातकः ॥ तिनिशे स्यंदनो नेमी रथद्रुरतिमुक्तकः
॥२६॥ वंजुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ॥ आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ॥२७॥ वानप्रस्थमधुष्ठीलौ जलजेत्र मधूलकः ॥ पीलौ गुड

८

फलः स्रंसी तस्मिंस्तु गिरिसंभवे ॥२८॥ अक्षोटकंदरालौ द्वावंकोटे तु निकोचकः ॥ पलाशे किंशुकः पर्णो वातपोथोथ वेतसे ॥२९॥ रथाभ्रपुष्पविदुलशीतवानीर

नी

वंजुलाः ॥ साची ७ बांबाडण्याची ३ मोहाची ५ जळींहोणारा मोहयाची पानें मोठीं असतात. पिलुवृक्षाची अक्रोड प्रसिद्ध ३ डोंगरी अक्रोड २ पिस्त्याची ३ पळसाची ४ वेताची ७ जलवेताची ४ ॥ ॥

शेवग्यान्वीं ५ नावड्याचेपुष्पांचाशेवगा. रिंग्यांचीं २ बेलाचीं ५ पिंपरीचीं ३ वडाचीं ३ लोधाचीं ६ आंब्याचीं ३ इरसालआंबा २ आंब्याचीं ४ गुग्गुलवृक्षाचीं ५ भोकरीचीं ५ चारइतिरव्यातस्य ४ शिवणीइतिरव्यातस्य ७ बोरीचीं ३ बोराचीं ६ वेकळीइतिरव्यातस्य ५ नारिंगाचीं. टेंबुरणीचीं ४ काजरस्याचीं ४ मोरव्याचीं ५ तिळवा ३ तिळकभेद. कायफळाचींकुंभ्याम० लोहितेलोभाचीं ४



द्वौपरिव्याधविधुलौनादेयीचांबुवेतसे॥३०॥ सौभांजनेशिग्रुतीक्ष्णगंधकाक्षीवमोचकाः॥ रक्तोसौमधुशिग्रुःस्यादरिष्टःफेनिलःसमौ॥३१॥ बिल्वेशांडिल्यशैलूषौमालूरश्रीफलावपि॥ प्लक्षोजटीपर्कटीस्यान्न्यग्रोधोबहुपाद्वटः॥३२॥ गालवःशाबरोलोध्रस्तिरीटस्तिल्वमार्जनौ॥ आम्रश्चूतोरसालोसौसहकारोतिसौरभः॥३३॥ कामांगोमधुदूतश्चमाकंदःपिकवल्लभः॥ कुंभोलूखलकंक्लीबेकौशिकोगुग्गुलःपुरः॥३४॥ शेलुःश्लेष्मातकःशीतउद्दालोबहुवारकः॥ राजादनंप्रियालःस्यात्सन्नकद्रुर्धनुष्पटः॥३५॥ गंभारीसर्वतोभद्राकाश्मरीमधुपर्णिका॥ श्रीपर्णीभद्रपर्णीचकाश्मर्यश्चाप्यथद्वयोः॥३६॥ कर्कंधूर्बदरीकोलीकोलंकुवलफेनिले॥ सौवीरंबदरंघोंटाप्यथस्यात्स्वादुकंटकः॥३७॥ विकंकतःस्रुवावृक्षोग्रंथिलोव्याघ्रपादपि॥ ऐरावतोनागरंगोनारंगोमुखवासनः॥३८॥ जंबूःसुरभिपत्राचराजजंबूर्महाफला॥ सूक्ष्मपत्राक्षुद्रजंबूर्नादेयीभूमिजंबुका॥३९॥ तिंदुकःस्फूर्जकःकालःस्कंधश्चशितिसारकः॥ काकेंदुःकुलकःकाकपीलुकःकाकतिंदुके॥४०॥ गोलीढोझाटलोघंटापाटलिर्मोक्षमुष्ककौ॥ तिलकःक्षुरकःश्रीमान्समौपिचुलझाबुकौ॥४१॥ श्रीपर्णिकाकुमुदिकाकुंभीकैडर्यकट्फलौ॥ क्रमुकःपट्टिकाख्यःस्यात्पट्टीलाक्षाप्रसादनः॥ तूदस्तूलश्चपूपःक्रमुकोब्रह्मण्योब्रह्मदारुच॥४२॥



अश्वत्थाकारवृक्षपारसापिंपळप्रसिद्ध ६ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

फळेव ४ बिवेवा ४ लाखीपिंपरी ५ चिंचेची ३ आसण्याची ६ सालेईप्रसिद्ध ५ अर्जुनवृक्ष ५ खिरणीप्रसिद्ध ३ हिंगणबेट २ भूर्जवृक्ष ३ सांवरीची ५ षष्टिवर्षसहस्त्राणिवनेजीवतिशाल्मलिरितिवचनात्.

तूलंचनीपप्रियककैंबास्तुहलिप्रिये ॥ वीरवृक्षोरुष्करोग्निमुखीभल्लातकीत्रिषु ॥ ४३ ॥ गर्दभांडेकंदरालकपीतननुसूपार्श्वकाः ॥ प्लक्षो चिंतिडीचिंचाम्लिकाथो पीतनसारके ॥ ४४ ॥ सर्जकासनबंधूकपुष्पप्रियकजीवकाः ॥ सालेतुसर्जकार्ष्याश्वकर्णिकाः सस्यसंबरः ॥ ४५ ॥ नदीसर्जोवीरतरुरिंद्रद्रुःककुभोर्जुनः ॥ राजादनः फलाध्यक्षः क्षीरिकायामथद्वयोः ॥ ४६ ॥ इंगुदीतापसतरुर्भूर्जेचर्मिमृदुत्वचौ ॥ पिच्छिलापूरणीमोचास्थिरायुः शाल्मलिर्द्वयोः ॥ ४७ ॥ पिच्छातुशाल्मलीवेष्टेरोचनः कूटशाल्मलिः ॥ चिरबिल्वोनक्तमालः करजश्चकरंजके ॥ ४८ ॥ प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ॥ करंजभेदाः षड्ग्रंथोमर्कट्यंगारवल्लरी ॥ ४९ ॥ रोहीरोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥ गायत्रीबालतनयः खदिरोदंतधावनः ॥ ५० ॥ अरिमेदोविट्खदिरेकदरः खदिरेसिते ॥ सोमवल्कोप्यथव्याघ्रपुच्छगंधर्वहस्तकौ ॥ ५१ ॥ एरंडउरुबूकश्चरुचकश्चित्रकश्चसः ॥ चंचुः पंचांगुलोमंडवर्धमानव्यडंबकाः ॥ ५२ ॥ अल्पाशमीशमीरः स्याच्छमीसक्तुफलाशिवा ॥ पिंडीतकोमरुबकः श्वसनः करहाटकः ॥ ५३ ॥ शल्यश्चमदनेशक्रपादपः पारिभद्रकः ॥ भद्रदारुद्रुकिलिमंपीतदारुचदारुच ॥ ५४ ॥ पूतिकाष्ठंचसप्तस्युर्देवदारुण्यथद्वयोः ॥ पाटलिःपाटलामोघाकाचस्थालीफलेरुहा ॥ ५५ ॥ कृष्णावृंताकुबेराक्षीश्यामातुमहिलाव्हया ॥ लतागोवंदनीगुंद्राप्रियंगुः फलिनीफली ॥ ५६ ॥ विष्वक्सेनागंधफलीकारंभाप्रियकश्चसा ॥ मंडूकपर्णपत्रोर्णनटकट्वंगटुंटुकाः ॥ ७ ॥ स्योनाकशुकनासर्क्षदीर्घवृंतकुटंनटाः ॥ सांवरीचाडीक. कांळीसांवरी २ करंजवृक्ष ४ घाणेराकरंज. कांटेकरंज ४ रू

रुजभेद ३ रक्तरोहिडा ४ खैर ४ दुर्गंधिखैर ४ पांढरा खैर २ एरंडाची ११ स्वल्पाकारशमी-शमीची ३ गेळ्याची ६ देवदारु ७ पाडळीची ७ टेंटूची १२ दिंडाप्रसिद्ध १२ ॥

आंवळी ४ धारिंग ६ बेहेडा डांतिके चिन-हरीतेकी ११ सरळदेवदार ३ पांगारा ३ ओरटे ३ फणस २ जरइति रव्यातस्य ३ काळाउंबर ४ निंबाचीं ६ शिलंव्याचीं ४ अगरुस्याच्छिंशपायामितिविरवः शिरिस ३ सोनच्यां

शोणकश्चारलौतिष्यफलात्वामलकीविषु ॥ ५८ ॥ अमृतानवयस्याचत्रिलिंगःस्तुकबिभीतकः ॥ नाक्षस्तुषःकर्षफलोभूतावासःकलिद्रुमः ॥ ५९ ॥ अभयात्वव्यथा पथ्याकायस्थापूतनामृता ॥ हरीतकीहैमवतीचेतकीश्रेयसीशिवा ॥ ६० ॥ पीतद्रुःसरलःपूतिकाष्ठंचाथद्रुमोत्पलः ॥ कर्णिकारःपरिव्याधोलकुचोलिकुचोड हुः ॥ ६१ ॥ पनसःकंटकिफलोनिचुलोंबुजौहिज्जलौ ॥ काकोदुंबरिकाफल्गुर्मलपूर्जघनेफला ॥ ६२ ॥ अरिष्टःसर्वतोभद्रहिंगुनिर्यासमालकाः ॥ पिचुमंद श्चनिंबेथपिछिलागुरुशिंशुपा ॥ ६३ ॥ कपिलाभस्मगर्भासाशिरीषस्तुकपीतनः ॥ भंडिलोप्यथचांपेयश्चंपकोहेमपुष्पकः ॥ ६४ ॥ एतस्यकलिकागंध फलीस्यादथकेसरे ॥ बकुलोवंजुलोशोकेसमौकरकदाडिमौ ॥ ६५ ॥ चांपेयःकेसरोनागकेसरःकांचनाव्हयः ॥ जयाजयंतीतर्कारीनादेयीवैजयंतिका ॥ ६६ ॥ श्रीपर्णमग्निमंथःस्यात्कणिकागणिकारिका ॥ जयोथकुटजःशक्रोवत्सकोगिरिमल्लिका ॥ ६७ ॥ एतस्यैवकलिंगेंद्रयवभद्रयवंफले ॥ कृष्णपाक फलाविग्नसुषेणाःकरमर्दके ॥ ६८ ॥ कालस्कंधस्तमालःस्यात्ताविच्छोप्यथसिंधुके ॥ सिंदुवारेंद्रसुरसौनिर्गुंडीइंद्राणिकेत्यपि ॥ ६९ ॥ वेणीखरागरीदे वताडोजीमूतइत्यपि ॥ श्रीहस्तिनीतुभूरुंडीतृणशून्यंतुमल्लिका ॥ ७० ॥ भूपदीशीतभीरुश्चसैवास्फोतावनोद्भवा ॥ शेफालिकातुसुवहानिर्गुंडीनीलिकाचसा ॥ ७१

लो रा

फा ४ चांफ्याचीकळीनषट्पदोगंधफलीमजिघ्रदिति ॥ बकूळ २ अशोक-डाळिंब २ नागचांफा अयंषट्पदप्रियः ४ स्वर्णभसपंख्योनागकेसरः षट्पदप्रियइतिरभसात् ॥ थोरऐरण ५ नरवेल ५ कुडा ४ कुड्याचेबीं ३ करवंद ४ कृष्णपाकफलंअस्य ॥ तमालस्य २ निर्गुंडी ५ देवडांगरी ५ थोरकुरंडु २ मोगरी ४ मल्लिकोहंसभेदेस्यात्तृणशून्येपिमल्लिकेतिरुद्रः ॥ रानमोगरी- रानंनिर्गुंडी ४ हीकृष्णा

५

पुष्पा॥ कानरीनिर्गुंडीहीश्वेतपुष्पा-जेई-पिंवळीजुई-कुंदभेदकुसरीप्रसिद्ध-जाई ३ नेवाळी-कुंद २ बंधुर्कदुपारीप्रसिद्ध ३ सेवंतीगुलाब ३ आबोली २ तांबडाकोरंटक-पिंवळाकोरंटा-निळाकोरंटा ३ आरक्तकोरंटी

सितासौश्वेतसूरसाभूतवेश्ययुमागधी॥ गणिकायूथिकांबष्ठासापीताहेमपुष्पिका॥७२॥ अतिमुक्तःपुंड्रकःस्याद्वासंतीमाधवीलता॥ सूमनामालतीजा
तिःसप्तलानवमल्लिका॥७३॥ माध्यंकुंदंरक्तकस्तुबंधूकोबंधुजीवकः॥ सहाकुमारीतरणीरम्लानस्तुमहासहा॥७४॥ तत्रशोणेकुरबकस्तत्रपीतेकुरंटकः॥नी
लाझिंटीद्वयोर्बाणादासीचार्त्तगलस्तथा॥७५॥ सैरेयकस्तुझिंटीस्यात्तस्मिन्कुरबकोरुणे॥ पीताकुरंटकोझिंटीतस्मिन्सहचरीद्वयोः॥७६॥ ओंड्रपुष्पंजपा
पुष्पंवज्रपुष्पंतिलस्ययत्॥ प्रतिहासशतप्रासचंडातहयमारकाः॥७७॥ करवीरेकरीरेतुक्रकरग्रंथिलावुभौ॥ उन्मत्तःकितवोधूर्त्तोधत्तूरःकांचनाव्हयः॥७८॥
मातुलोमदनश्चास्यफलेमातुलपुत्रकः॥ फलपूरोबीजपूरोरुचकोमातुलुंगके॥७९॥ समीरणोमरुबकःप्रस्थपुष्पःफणिज्जकः॥ जंबीरोप्यथपर्णासेकठिंजर
कुठेरकौ॥८०॥ सितेर्जकोत्रपाठीतुचित्रकोवन्हिसंज्ञकः॥ अर्कोव्हवसुकास्फोटगणरूपविकीरणाः॥ मंदारश्चार्कपर्णोत्रशुक्लेलर्कप्रतापसौ॥८१॥ शिवेमल्ली
पाशुपतएकाष्ठीलोबुकोवसुः॥ वंदावृक्षादनीवृक्षरुहाजीवंतिकेत्यपि॥८२॥ वत्सादनीछिन्नरुहागुडूचीतंत्रिकामृता॥ जीवंतिकासोमवल्लीविशल्यामधु
पर्णिका॥८३॥ मूर्वादेवीमधुरसामोरटातेजनीस्रवा॥ मधूलिकामधुश्रेणीगोकर्णीपीलुपर्ण्यपि॥८४॥ पाटांबष्ठाविद्धकर्णीस्थापनीश्रेयसीशिवा॥ एकाष्ठीला
पापचेलीप्राचीनावनतिक्तिका॥८५॥ कटुःकटुंभराशोकरोहिणीकटुरोहिणी॥ मत्स्यपित्ताकृष्णभेदीचक्रांगीशकुलादनी॥८६॥ पिंवळीकोरंटी-जास्वंद ३ तिलपुष्प

कण्हेराची-कारवी ३ धोत्र्याची ७ धत्तूरफळ २ महाळुंग ४ जांबराची ५ बाबरीप्रसिद्ध ३ मांदरीबाबरी-चित्रकाची ३ रुईची ७ पांढरीरुई २ रुइमंदार ५ वृक्षावरीलबांदें ४ गुळवेल ९ मोरवेल १० पाडळमूळ १० केदारकुटकी-

त

कुंबली कुहिरी १ मर्कटतुल्यलोमयुक्तत्वान्मर्कटी-उंदीरकानी १० आघाडा ८ भार्ङ्गी ची १ मंजिष्ठेनी ९ धमासा १० डवलापिठवणम ०१ रिंगणी १० नीळ ११ बावची ८ पिंपळी १० गजपिंपळी ९ चवक



आत्मगुप्ताजहाव्यंडाकंडूराप्रावृषायणी ॥ ऋष्यप्रोक्ताशूकशिंबिः कपिकच्छुश्चमर्कटी ॥ ८७ ॥ चित्रोपचित्रान्यग्रोधीद्रवंतीशंबरीवृषा ॥ प्रत्यक्श्रे
णीसुतश्रेणी रंडामूषकपर्ण्यपि ॥ ८८ ॥ अपामार्गः शैखरिकोधामार्गवमयूरकौ ॥ प्रत्यक्पर्णीकेशपर्णीकिणिहीखरमंजरी ॥ ८९ ॥ हंजिकाब्राह्मणी
पद्माभार्ङ्गीब्राह्मणयष्टिका ॥ अंगारवल्लीबालेयशाकबर्बरवर्धकाः ॥ ९० ॥ मंजिष्ठाविकसाजिंगीसमंगाकालमेषिका ॥ मंडूकपर्णीभंडीरीभंडीयोजनवल्ल्यपि
॥ ९१ ॥ यासोयवासोदुःस्पर्शोधन्वयासः कुनाशकः ॥ रोदनीकच्छुरानंतासमुद्रांतादुरालभा ॥ ९२ ॥ पृश्निपर्णीपृथक्पर्णीचित्रपर्ण्यंघ्रिपर्णिका ॥ क्रोष्टुविन्नासिं
हपुच्छीकलशिर्धावनिर्गुहा ॥ ९३ ॥ निदिग्धिकास्पृशीव्याघ्रीबृहतीकंटकारिका ॥ प्रचोदनीकुलीक्षुद्रादुःस्पर्शाराष्ट्रिकेत्यपि ॥ ९४ ॥ नीलीकालाक्लीतकिका
ग्रामीणामधुपर्णिका ॥ रंजिनीश्रीफलीतुत्थाद्रोणीदोलाचनीलिनी ॥ ९५ ॥ अवल्गुजः सोमराजीसुवल्लीसोमवल्लिका ॥ कालमेषीकृष्णफलाबाकुचिः पू
तिफल्यपि ॥ ९६ ॥ कृष्णोपकुल्यावैदेहीमागधीचपलाकणा ॥ उषणापिप्पलीशौंडीकोलाथकरिपिप्पली ॥ ९७ ॥ कपिवल्लीकोलवल्लीश्रेयसीवशिरः पु
मान् ॥ चव्यंतुचविकाकाकचिंचीगुंजेतुकृष्णला ॥ ९८ ॥ पलंकषात्विक्षुगंधाश्वदंष्ट्रास्वादुकंटकः ॥ गोकंटकोगोक्षुरकोवनशृंगाटइत्यपि ॥ ९९ ॥ विश्वा
विषाप्रतिविषातिविषोपविषारुणा ॥ शृंगीमहौषधंचाथक्षीरावीदुग्धिकासमे ॥ १०० ॥ शतमूलीबहुसुताभीरुरिंदीवरीवरी ॥ ऋष्यप्रोक्ताभीरुपत्रीनारा
यण्यः शतावरी ॥ १ ॥

गुंजा ३ गोखरू ० सराटा ७ अतिविषम ०८ दुधीम ०२ शतावरी ०१० ॥

दारुहळद ७ वेरंवंड ५ शक्लेवेरवंड- अडूळसा ८ विष्णुक्रांता ४ कोळेसंदा ५ वडीशेप ६ शेरणिंवडुंग ६ वांवडिंग ६ चिकणा २ लघुनाग २ द्राक्ष ५ श्वेतनिसोत्तर ७ काळानिसोत्तर ४ ज्येष्ठीमध ४ शक्लभूमि-

अथपीतद्रु कालीयकहरिद्रवः ॥ दार्वीपचंपचादारुहरिद्रापर्जनीत्यपि ॥१०२॥ वचोग्रगंधाषड्ग्रंथागोलोमीशतपर्विका ॥ शक्लाहैमवतीवैद्यमातृ
सिंहीतुवासिका ॥१०३॥ वृषोटरूषः सिंहास्योवासकोवाजिदंतकः ॥ आस्फोतागिरिकर्णीस्याद्विष्णुक्रांतापराजिता ॥१०४॥ इक्षुगंधातुकांडेक्षुकोकिला
क्षेक्षुरक्षुराः ॥ शालेयः स्याच्छीतशिवश्छत्रामधुरिकामिसिः ॥१०५॥ मिश्रेयाप्यथसीहुंडोवज्रः स्नुक्[illegible]स्नुहीगुडा ॥ समंतदुग्धाथोवेल्लममोघाचि
त्रतंडुला ॥१०६॥ तंडुलश्चकृमिघ्नश्चविडंगंपुंनपुंसकं ॥ बलावाट्यालकोघंटारवातुशणपुष्पिका ॥१०७॥ मृद्वीकागोस्तनीद्राक्षास्वाद्वीमधुर
सेतिच ॥ सर्वानुभूतिः सरलात्रिपुटात्रिवृतात्रिवृत् ॥१०८॥ त्रिभंडीरोचनीश्यामापालिंद्यौतुसुषेणिका ॥ कालामसूरविदलार्धचंद्राकालमेषि
का ॥९॥ मधुकंक्लीतकंयष्टिमधुकंमधुयष्टिका ॥ विदारीक्षीरशुक्लेक्षुगंधाक्रोष्ट्रीतुयासिता ॥१०॥ अन्याक्षीरविदारीस्यान्महाश्वेतर्क्षगंधिका ॥ लां
गलीशारदीतोयपिप्पलीशकुलादनी ॥११॥ खराश्वाकारवीदीप्योमयूरोलोचमस्तकः ॥ गोपीश्यामाशारिवास्यादनंतोत्पलशारिवा ॥१२॥ योग्यमृ
द्धिः सिद्धिलक्ष्म्यौवृद्धेरप्याह्वयाइमे ॥ कदलीवारणबुसारंभामोचांशुमत्फला ॥१३॥ काष्ठीलामुद्गपर्णीतुकाकमुद्गासहेत्यपि ॥ वार्ताकीहिंगुलीसिंही
भंटाकीदुःप्रधर्षिणी ॥१४॥ नाकुलीसुरसारास्नासुगंधागंधनाकुली ॥ नकुलेष्टाभुजंगाक्षीछत्राकीसुवहाचसा ॥१५॥

कोहळा ४ कृष्णभूमिकूष्मांड ३ जळ
पिंपळीचीं ४ मोरशेंडा ५ उपळसरी ५ गोपीश्यामागोपवल्लीगोपागोपालिकानंतसेनिवानस्पतिः सुरुडशिंगदधिनामकऔषध ४ केळीचीं ६ रानमूग ३ रानवायगींडोर्ली ५ रास्ना ९ ॥ ॥

गांजा दोडका

३ बलासांळवणप्र॰ ५ कोर्पासी[1] ४ रानकोपसी॰ बैलपांढी ३ न्हस्वचिकेणाप्रसिद्ध ४ घोंसोबी[7] २ पीतपुष्पघोंसाळी॰ पडवळ[8] ३ भुयीजांबळीप्रसिद्ध[9] २ कंवळलावी[10] २ कांवळी[11] २ रक्तशेजाळू[12] २ मुसळीकंद[13] २

विदारिगंधांशुमतीशालपर्णीस्थिराध्रुवा॥ तुंडिकेरीसमुद्रांतांकार्पासीबदरेतिच॥ १६॥ भारद्वाजीतुसावन्याशृंगीतुवृषभोऋषः॥ गांगेरुकीनागब-लाझषान्हस्वगवेधुका॥ १७॥ धामार्गवोघोषकःस्यान्महाजालीसपीतकः॥ ज्योत्स्नीपटोलिकाजालीनादेयीभूमिजंबुका॥ १८॥ स्याल्लांगलिक्यग्नि-शिखाकांकांगीकाकनासिका॥ गोधापदीतुसुवहामुसलीतालमूलिका॥ १९॥ अजशृंगीविषाणीस्याद्गोजिव्हादार्विकेसमे॥ तांबूलवल्लीतांबूलीना-गवल्ल्यप्यथद्विजा॥ २०॥ हरेणुरेणुकाकौंतीकपिलाभस्मगंधिनी॥ एलावालुकमैलेयंसुगंधिहरिवालुकं॥ २१॥ वालुकंचाथपालंक्यांमुकुंदःकुंदकुंदुरु॥ २२॥ बालंह्रीबेरबर्हिष्ठोदीच्यंकेशांबुनामच॥ २२॥ कालानुसार्यवृद्धाश्मपुष्पशीतशिवानितु॥ शैलेयंतालपर्णीतुदैत्यागंधकुटीमुरा॥ २३॥ गंधिनीग-जभक्ष्यातुसुवहासुरभीरसा॥ महेरणाकुंदुरुकीशल्लुकीह्लादिनीतिच॥ २४॥ अग्निज्वालासुभिक्षेतुधातकीधातुपुष्पिका॥ पृथ्वीकाचंद्रवाले-लानिष्कुटिर्बहुलाथसा॥ २५॥ सूक्ष्मोपकुंचिकातुस्थाकारंगीत्रिपुटात्रुटिः॥ व्याधिःकुष्ठंपारिभाव्यंव्याप्यंपाकलमुत्पलं॥ २६॥ शंखिनीचोरपुष्पी-स्यात्केशिन्यथवितुन्नकः॥ झाटामलाज्झटातालीशिवातामलकीतिच॥ २७॥ प्रपौंडरीकंपुंडर्यमथतुन्नःकुबेरकः॥ कुणिःकच्छःकांतलको-नंदीवृक्षोथराक्षसी॥ २८॥ चंडाधनहरीक्षेमदुःषत्रगणहासकाः॥ व्याडायुधंव्याघ्रनखंकरजंचक्रकारकं॥ २९॥ मेंढशिंगी[14] २ पाथरी[15] २ पानवेल[16] ३ रेणुकबीज[17]

६ वाळुक[18] ५ पालख[19] प्र॰ ४ वाळा[20] ६ शिलाजित[21] ५ तालीसपत्र[22] ५ साळईप्र॰[23] ८ धायटी[24] ४ अग्नेर्ज्वालेवरक्तपुष्पत्वात्॰ एला[25] ५ सूक्ष्मएला[26] ५ कुडुकोष्ठ॰ गोडेकोष्ठप्रसि॰[27] ६ सोरवेल[28] ३ भूम्यामलकी[29] ६ स्थलपद्म[30] २ नां-दरुखी[31] ६ चोर[32] ओंवा॰ किरमोणी[33] ६ व्याघ्रनख[34] ४

नलीनाम कर्णधद्रव्य ७ पवारीउत्तरपथेप्र० नखवेल्याला ७ नरौचा ६ मोथाप्र० ८ गंधीपर्नेभटोराप्र० पिंडिकोप्र० १० जटामांसी ५ दालचिनीतज ६ कचरोप्र० १४ कल्पेभवः काल्पकः वीरुत्यादि रोगहारकेकर नखौषधित्रिफलादि। शाकमूलपत्रकरीराग्रफलकांडादिरूढकं त्वक्पुष्पंकवचंचैवशाकंदशविधंस्मृतं॥ तत्रकरीरंवंशांकुरः। कांडंइक्षुदंडादि। अधिरूढकंबीजांकुरः। कवचंछत्राकंरोपंसर्पं॥

रुधिराविद्रुमलताकपोतांघ्रिर्नटीनली॥ धमन्यंजनकेशीचहनुर्हट्टविलासिनी॥३०॥ शुक्तिःशंखःखुरःकोलदलंनखमथाढकी॥ काक्षीमृत्स्ना
तुवरिकामृत्तालकसुराष्ट्रजे॥३१॥ कुटन्नटंदाशपुरंवानेयंपरिपेलवं॥ प्लवगोपुरगोनर्दकैवर्तीमुस्तकानिच॥३२॥ ग्रंथिपर्णंशुकंबर्हिपुष्पंस्थौणे
यकुक्कुरे॥ मरुन्मालातुपिशुनास्पृक्कादेवीलतालघुः॥३३॥ समुद्रांतावधूःकोटिवर्षालंकोपिकेत्यपि॥ तपस्विनीजटामांसीजटिलालोमशामिसिः
॥३४॥ त्वक्पत्रमुत्कटंभृंगंत्वचंचोचंवरांगकं॥ कर्चूरकोद्राविडकःकाल्पकोवेधमुख्यकः॥३५॥ ओषध्योजातिमात्रेस्युरजातौसर्वमौषधं॥ शाका
ख्यंपत्रपुष्पादितंडुलीयोल्पमारिषः॥३६॥ विशल्याग्निशिखानंताफलिनीशक्रपुष्प्यपि॥ स्याद्धर्क्षगंधाछगलांत्र्यावेगीवृद्धदारकः॥३७॥ जुंगो
ब्राह्मीतुमत्स्याक्षीवयस्थासोमवल्लरी॥ पटुपर्णीहैमवतीस्वर्णक्षीरीहिमावती॥३८॥ हयपुच्छीतुकांबोजीमाषपर्णीमहासहा॥ तुंडिकेरीरक्तफला
बिंबिकापीलुपर्ण्यपि॥३९॥ बर्बराकबरीतुंगीखरपुष्पाजगंधिका॥ एलापर्णीतुसुवहारास्नायुक्तरसाचसा॥४०॥ चांगेरीचुक्रिकादंतशठांब
ष्ठाम्ललोणिका॥ सहस्रवेधीचुक्रोम्लवेतसःशतवेध्यपि॥ नमस्कारीगंडकारीसमंगाखदिरेत्यपि॥ जीवंतीजीवनीजीवाजीवनीयामधुस्रवा॥४२॥

तांदुळजा २ कळलावी १ वरधारा ५ सोमवल्ली जिव्हामानेंश्रकुमक्षीयेनान कृष्णपक्षींगळतात ४ पिसोळा ४ सनउडीद ४ नोंडली ४ निळवणीकानफोडीम ४ कोलिंदणम ४ चुकाम ५ अम्लवेल ४ लाजाळू ४
हरेणवेल ५

भा॰ टी॰ जीवकरुख ५ किरोईत २ शिकेकाई ५ लहानकांबलीप्र॰ २ दांतीप्र॰ ५ ओंवो ४ पुष्करमूल २ स्थूलकमळिनीउत्तरदेशोप्रसिद्धा ५ शंडरोचनी ५ टाकळा ६ कांदो २ हरिद्धूर्णकांदा २ लसूण ६ पुनर्नवा २ कुरडू २ हि॰ कां॰

८

कूर्चशीर्षोमधुरकःशृंगह्रस्वांगजीवकाः ॥ किरातनिक्तोभूनिंबोनार्यनिक्तोथसमला ॥ ४३ ॥ विमेलासानलाभूरिफेनाचर्मकषेत्यपि ॥ वायसोलीस्वादुरसावयस्थाय

मकूलकः ॥ ४४ ॥ निकुंभोदंतिकामत्यकुंभेण्युदुंबरपर्ण्यपि ॥ अजमोदातूग्रगंधाब्रम्हदर्भायवानिका ॥ ४५ ॥ मूलंपुष्करकाश्मीरंपद्मपत्राणिपौष्करे ॥ अव्यथातिच

ग्रण ५ रापद्माचारटीपद्मचारिणी ॥ ४६ ॥ कांपिल्यःकर्कशश्चंद्रोरक्तांगोरोचनीत्यपि ॥ प्रपुन्नाडस्त्वेडगजोदद्रुघ्नश्चक्रमर्दकः ॥ ४७ ॥ पद्माटउरणाख्यश्चपलांडुस्तु ५४

सुकंदकः ॥ लतार्कदुद्रुमौतत्रहरितेथमहौषधं ॥ ४८ ॥ लशुनंगृंजनारिष्टमहाकंदरसोनकाः ॥ पुनर्नवातुशो[illegible]घ्नीवितुन्नस्सुनिषण्णकं ॥ ४९ ॥ स्याद्वातकःशी

जननी तलोपराजिता[illegible]पर्ण्यपि ॥ पारावतांघ्रिःकटभीपण्याज्योतिष्मतीलता ॥ ५० ॥ वार्षिकंत्रायमाणास्यात्त्रायंतीबलभद्रिका ॥ विष्वक्सेनाप्रियागृष्टिर्वाराहीव सि:

दरैतिच ॥ ५१ ॥ मार्कवोभृंगराजःस्यात्काकमाचीतुवायसी ॥ शतपुष्पासितछत्रातिछत्रामधुरामि[illegible] ॥ ५२ ॥ अवाक्पुष्पीकारवीचसरणातुप्रसारिणी ॥ त

स्यांकुंभरराजबलाभद्रबलेतिच ॥ ५३ ॥ जनीजतूकारजनीजतुरुक्चक्रवर्तिनी ॥ संस्पर्शाथशठीगंधमूलीषड्ग्रंथिकेत्यपि ॥ ५४ ॥ कर्चूरोपिपलाशोथका

रवेल्लःकठिल्लकः ॥ सुषवीचाथकर्कोटकंपटोलस्तिक्तकःपटुः ॥ ५५ ॥ कूष्मांडकस्तुकर्कारुर्वारुःकर्कटीस्त्रियौ ॥ इक्ष्वाकुःकटुतुंबीस्यात्तुंब्यलाबुरुभेसमे ॥ ५६ से

गोकर्णी ४ मालकांगोणीप्रसिद्ध ५ त्रायमाणाया: ४ वाराहीकंद ४ मांका २ कावळी २ शोंप ७ चांदवेल ५ चाकवत ६ कापूरकोचरी॰ आंबेहळद ५ कोरेकेल ३ कारळीप्रसिद्ध॰ पडवळ ४ को-

होळा २ कांकडी २ दुध्याकेंडूप्रोंपळा॰ काळोप्रोंपळा २ ॥ ७ ७ ७ ७ ७ ७ ७ ७ ७ ॥

कांवडळ २ मोठीकांवडळ. करैण ३ कडुकरैण २ वेण्वोक्तिः घोरमयाळ - मुळा. देशांनरेहलहंचि. ४ चंदनवेट्वा - दूर्वा ६ श्वेतेदूर्वा ४ मोथा ४ नागरमोथा २ फुरहीम ० २ वेळू १० सरंभवेळू वायूनेशब्दहोतात २

मू

चित्रागवाक्षीगोडुंबाविशालात्विंद्रवारुणी ॥ अर्शोघ्नः सूरणः कंदोगंडीरस्तु समष्ठिला ॥ ५७ ॥ कलंबुस्तुपोदिकास्त्रीतुमूलकंहिलमोचिका ॥ वास्तुकंशाकभेदाः स्युर्दूर्वातुशतपर्विका ॥ ५८ ॥ सहस्रवीर्याभार्गव्यौरुहानंताथसासिता ॥ गोलोमीशतवीर्याचगंडालीशकुलाक्षकः ॥ ५९ ॥ कुरुविंदोमेघनामामुस्तामुस्तकमस्त्रियाम् ॥ स्याद्भद्रमुस्तकोगुंद्राचूडालाचक्रलोचरा ॥ ६० ॥ वंशेत्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ शतपर्वायवफलोवेणुमस्करतेजनाः ॥ ६१ ॥ वेणवः कीचकास्तेस्युर्येस्वनंत्यनिलोद्धताः ॥ ग्रंथिर्नापर्वपरुषीगुंद्रस्तेजनकःशरः ॥ ६२ ॥ नडस्तुधमनःपोटगलोथोकाशमस्त्रियाम् ॥ इक्षुगंधापोटगलःपुंसिभूम्नितुबल्वजाः ॥ रसालइक्षुस्तद्भेदाःपुंड्रकांतारकादयः ॥ स्याद्वीरणंवीरतरंमूलेस्योशीरमस्त्रियां ॥ ६४ ॥ अभयंनलदंसेव्यममृणालंजलाशयं ॥ लामज्जकंलघुलयमवदाहेष्टकापथे ॥ ६५ ॥ नडाद्यैस्तृणंगर्मुच्छ्यामाकप्रमुखाअपि ॥ अस्त्रीकुशंकुथोदर्भःपवित्रमथकत्तृणं ॥ ६६ ॥ पौरसौगंधिकध्यामदेवजग्धकरौहिषं ॥ छत्रातिच्छत्रपालघ्नौमालातृणकभूस्तृणे ॥ ६७ ॥ शष्पंबालतृणंघासोयवसंतृणमर्जुनं ॥ तृणानांसंहतिस्तृण्यानड्यातुनडसंहतिः ॥ ६८ ॥ तृणराजाह्वयस्तालोनारिकेलस्तुलांगली ॥ घोंटातुपूगःक्रमुकोगुवाकःखपुरोस्यतु ॥ ६९ ॥ फलमुद्वेगमेतेचहिंतालसहितास्त्रयः ॥ खर्जूरःकेतकीतालीखर्जूरीचतृणद्रुमाः ॥ ७० ॥ इतिवनौषधिवर्गः ॥

लं

लि

पेर २ शरांची ३ देवनळ २ कारान्ची २ मोळलव्हाळे. ऊस २ पांदराऊस. फाळाबाळा २ वीरणस्यमूलंवाळाम० १० नडकाशादयः तृणजातीयाः गर्मुत्श्यामाकौतृणधान्यविशेषौ. कंगुकोद्रवादयः कुशांची ४ रोहीसगवत ६ जलेतृणभेदस्यशोतगवत ५ पालक्षेत्रहंतीति कोयलेतृणस्य २ गवादीनांभक्ष्यतृणस्य २ तृणमात्रस्य २ तृणसमुदायस्य. नडसमुदायस्य. नारळीचस्य २ तृणनाशकः नारळ २ सुपारीचेफळ ५ पूगस्यफलं तालैनारिकेलपूगाः हिंतालस० ए -

अ-को. ९

वंचत्वारः खर्जूरादयश्चत्वारः एवं अष्टौ तृणद्रुमाः उच्यंते. सिंहाची १० व्याघ्रेनाम ३ नरसेनाम २ सूकरनोमानि १२ वानर ९ आस्वल ४ केन्वनभाल्लूइनिवदंति. गेंडानाम ३ महिषनामागवाम्र० ५ भाल्लूम्र. कोल्हा

म्र. ९ मांजरेम्र. ५ घोरपेडीन्चेनायीं कृष्णसर्पापासून चारपायांचें जनावर. हें डसलें असतां मनुष्य मरतो ३ सांळईम्र० २ सांळेईल्लोम ३ मृगभेद २ हकनांमलांडगा ३ हरिण ५ मृगीचर्ममांसादि. मृगभेद

सिंहोमृगेंद्रः पंचास्योहर्यक्षः केसरीहरिः ॥ कंठीरवोमृगरिपुर्मृगदृष्टिर्मृगाशनः ॥ १ ॥ शार्दूलद्वीपिनौव्याघ्रेतरक्षुस्तुमृगादनः ॥ वराहः सूकरोघृष्टिः कोलः पोत्रीकि

रिः किटिः ॥ २ ॥ दंष्ट्रीघोणीस्तब्धरोमाक्रोडोभूदारइत्यपि ॥ कपिप्लवगप्लवगशाखामृगवलीमुखाः ॥ ३ ॥ मर्कटोवानरः कीशोवनौका अथभल्लुके ॥ ऋक्षाच्छ

भल्लभल्लूकागंडकेखड्गखड्गिनौ ॥ ४ ॥ लुलायोमहिषोवाहद्विषत्कासरसैरिभाः ॥ स्त्रियांशिवाभूरिमायुगोमायुमृगधूर्तकाः ॥ ५ ॥ शृगालवंचुकक्रोष्टुफेरुफेर

वजंबुकाः ॥ ओतुर्बिडालोमार्जारोवृषदंशकआखुभुक् ॥ ६ ॥ त्रयोगोधारगोधेरगौधेयागोधिकात्मजे ॥ श्वाविनुशल्यस्तल्लोम्निशललीशललंशलं ॥ ७ ॥

वातप्रमीर्वातमृगः कोकईहामृगोवृकः ॥ मृगेकुरंगवातायुहरिणाजिनयोनयः ॥ ८ ॥ ऐणेयमेण्याश्चर्मांद्यमेणस्यैणमुभेत्रिषु ॥ कदलीकंदलीचीनश्चमू

रुप्रियकावपि ॥ ९ ॥ समूरुश्चेतिहरिणाअमीअजिनयोनयः ॥ कृष्णसाररुरुन्यंकुरंकुशंबररौहिषाः ॥ १० ॥ गोकर्णपृषतैणर्श्यरोहिताश्चमरोमृगाः ॥

गंधर्वः शरभोरामः सृमरोगवयः शशः ॥ ११ ॥ इत्यादयोमृगेंद्राद्यागवाद्याः पशुजातयः ॥ उंदुरुर्मूषिकोप्याखुर्गिरिकाबालमूषिका ॥ १२ ॥ छुछुंदरीगंधमु

खीदीर्घतुंडीदिवांधिका ॥ सरठः कृकलासः स्यान्मुसलीगृहगोधिका ॥ १३ ॥ लूतास्त्रीतंतुवायोर्णनाभमर्कटकाः समाः ॥ नीलंगुस्तु कृमिः कर्णजलौका ॰

शतपद्युभे ॥ १४ ॥ नाम ६ कस्तूरीमृगना. १२ गवयनामा ३ पशुना. उंदीरम्र. स्वल्पमूषकजाति २ चिचोंद्री ४ सरडाम्र. २ पाल २ मार्कंडीनिम्र. कोळीमसि. घुळेमसि० ३ गोमम्र. २

ग जदृ तिपाठं तेर

य

द्वि.

सिं

स्ल

ष्य

छु

९

ऊर्णादिमंसकर्कामविशोषकसर २ विंचू ३ पारवेप्रसिद्ध ३ श्येनना ३ घुबडे ८ कुकडेकोंभाप्र. २ खंजननाम. २ बाणोपयोगीपत्रस्यपक्षिवि. चाषनाम २ मस्तकेचूडपक्षि ३ रूतार २ चातकनाम २ कुकुटप्रसि. चिमणा २ चिमणीप्र. २ तस्युरुषापत्यना. तस्त्रीरूपापत्यना. करटोकपक्षि २ करके २ कोकिलप्र. ४ कावळा. १० डोमकावळा २ जलकौक २ चिल्हप्र. घार. २ गिधाडप्र. रावेप्र. २ कुरकुंचप्र. २ बगळाप्र. २ केज-

वृश्चिकः शूककीटः स्यात् द्रलिद्रोणौ तु वृश्चिके ॥ पारावतः कलरवः कपोतोऽथ शशादनः ॥ १५ ॥ पत्री श्येन उलूके तु वायसारातिपेचकौ ॥ दिवांधः कौशिको घूको दिवाभीतो निशाटनः ॥ १६ ॥ व्याघ्राटः स्याद्भरद्वाजः खंजरीटस्तु खंजनः ॥ लोहपृष्ठस्तु कंकः स्यादथ चाषः किकीदिविः ॥ १७ ॥ कलिंगभृंगधूम्याटा अथ स्याच्छतपत्रकः ॥ दार्वाघाटोऽथ सारंगस्तोककश्चातकः समौ ॥ १८ ॥ कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ चटकः कलविंकः स्यात्तस्य स्त्री चटका तयोः ॥ १९ ॥ पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव हि ॥ कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ ॥ २० ॥ वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ॥ २१ ॥ ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ द्रोणकाकस्तु काकोलो दात्यूहः कालकंटकः ॥ २२ ॥ आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥ क्रुङ् क्रौंचोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः ॥ २३ ॥ कोकश्चक्रश्चक्रवाको रथांगाह्वयनामकः ॥ कादंबः कलहंसः स्यादुत्क्रोशकुररौ समौ ॥ २४ ॥ हंसास्तु श्वेतगरुतश्चक्रांगा मानसौकसः ॥ राजहंसास्तु ते चंचुचरणैर्लोहितैः सिताः ॥ २५ ॥ मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः ॥ शरारिराटिराडिश्च बलाका बिसकंठिका ॥ २६ ॥ हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥

लेव्हयतेशब्दंकुरुतेइनिकल्हः ॥ सारसप्रसिद्ध २ चक्रवाकना. ४ बदकइतिप्र. टिटवीप्र. २ हंसनामानि ४ राजहंस. राजहंसभेद. राजहंसविशेष. आडीइतिख्यातस्य ३ बगळीति २ हंसस्त्रीनाम. सारसस्त्रीनाम.

बंडूरी २ वाधूळ २ मक्षिका ३ मधमाशी २ मधमोशी भेद २ रानमाशी २ वनमक्षिकाजाति-गांधीणमाशी २ भिरकूंदन्विलट ४ टोळ २ फाजेवा २ भ्रमर ११ मोराची ९ मयूरवाणी॰ पिच्छस्थनेत्रा

जतुकाजिनपत्रास्यात्परोष्णी तैलपायिका॥ वर्वणामक्षिकानीलासरघामधुमक्षिका॥ पतंगिकापुत्तिकास्याद्दंशस्तद्वनमक्षिका॥ २८॥ दंशीतज्जाति
रल्पास्याद्गंधोली वरटाद्वयोः॥ भृंगारीझीरुकाचीरीझिल्लिकाचसमाइमाः॥ २९॥ समौपतंगशलभौखद्योतोज्योतिरिंगणः॥ मधुव्रतोमधुकरोमधुलिण्म
धुपालिनः॥ ३०॥ द्विरेफपुष्पलिड्भृंगषट्पदभ्रमरालयः॥ मयूरोबर्हिणोबर्हीनीलकंठोभुजंगभुक्॥ ३१॥ शिखावलःशिखीकेकीमेघनादानुला
स्यपि॥ केकावाणीमयूरस्यसमौचंद्रकमेचकौ॥ ३२॥ शिखाचूडाशिखंडस्तुपिच्छबर्हेनपुंसके॥ खगेविहंगविहगविहंगमविहायसः॥ ३३॥ शकुं
तिपक्षिशकुनिशकुंतशकुनद्विजाः॥ पतत्रिपत्रिपतगपतत्पत्ररथांडजाः॥ ३४॥ नगौकोवाजिविकिरविविष्किरपतत्रयः॥ नीडोद्भवागरुत्मंतःपित्सं
तोनभसंगमाः॥ ३५॥ तेषांविशेषाहारीतोमद्गुःकारंडवःप्लवः॥ तित्तिरिःकुक्कुभोलावोजीवंजीवश्चकोरकः॥ ३६॥ कोयष्टिकष्टिट्टिभकोवर्तकोवर्तिको
दयः॥ गरुत्पक्षच्छदाःपत्रंपतत्रंचतनूरुहं॥ ३७॥ स्त्रीपक्षतिःपक्षमूलेचंचुःस्त्रोटिरुभेस्त्रियौ॥ प्रडीनोड्डीनसंडीनान्येताःखगगतिक्रियाः॥ ३८॥
पेशीकोशोद्विहीनेंडंकुलायोनीडमस्त्रियां॥ पोतःपाकोर्भकोडिंभःपृथुकःशावकःशिशुः॥ ३९॥ स्त्रीपुंसौमिथुनंद्वंद्वंयुग्मंतुयुगलंयुगं॥ कारचिन्ह २ मयूर-

शिखा २ पिच्छनाम ३ पक्षिमात्राची २७ हारिलप्र॰ पानबुडी॰ करडुवा॰ तित्तिरप्र॰ वनकुकुटी॰ लावा-जीवंजीवप्र॰ मयूरतुल्यपत्रकः जीवंजीवयतीतिजीवंजीवः तद्दर्शनेनविषनाशनात् चकोरना १०
म॰ टिटवी २ वर्तकनाम॰ पंखनाम॰ ६ पक्षमूळ॰ चोंच॰ पक्षिगतिविशेष तिर्यग्गमनंऊर्ध्वगमनंसंगतगमनं अंडनामानि ३ क्लीबे पक्षिगृहनाम २ शिशुनाम ७ स्त्रीपुरुषनाम॰ युग्मस्य॰ ३॥

समुदायार्न्वी २२ मनुष्यैवर्गः पशुसंघः वणिक्सार्थः विप्रकुलं मृगयूथं पशुसमाजः श्रोत्रियसमाजः श्रोत्रियनिकायः धान्यादिराशिः कपोतादीनांसमूहेकापोतादीनिस्युः मनुष्याची ११ स्त्रीनौं ११
महस्यउत्सवस्यईलाभूमिरितिविग्रहेमहेला महंउत्सवंलातीतिमहला. प्रशंस्तांग्याः भयेशीला कामयमाना चारुनेत्रा प्रकृष्टकामवेगा प्रणयकोपयती मनोहरा . ललनाउक्ता शोभ

संमूहनिवहव्यूहसंदोहविसरव्रजाः॥४०॥ स्तोमौघनिकरव्रातवारसंघातसंचयाः॥समुदायःसमुद यःसमवायश्चयोगणः॥४१॥ स्त्रियांतुसंहतिर्वृंद
निकुरंबंकदंबकं॥ वृंदभेदाःसमैर्वर्गःसंघेसार्थौतुजंतुभिः॥४२॥ सजातीयैःकुलंयूथंतिरश्चांपुन्नपुंसकं॥ पशूनांसमजोन्येषांसमाजोथसधर्मिणां
॥४३॥ स्यान्निकायःपुंजराशीतूत्करःकूटमस्त्रियां॥ कापोतशौकमायूरतैत्तिरादीनितद्गणे॥४४॥ गृहासक्ताःपक्षिमृगाश्छेकास्तेगृह्यकाश्चते॥४५
इतिसिंहादिवर्गः॥ ॥मनुष्यामानुषामर्त्यामनुजामानवानराः॥ स्युःपुमांसःपंचजनाःपुरुषाःपूरुषानराः॥१॥ स्त्रीयोषिदबलायोषानारीसी
मंतिनीवधूः॥ प्रतीपदर्शिनीवामावनितामहिलातथा॥२॥ विशेषास्त्वंगनाभीरुःकामिनीवामलोचना॥ प्रमदामानिनीकांताललनाचनितंबिनी॥
३॥ सुंदरीरमणीरामाकोपनासैवभामिनी॥ वरारोहामत्तकाशिन्युत्तमावरवर्णिनी॥४॥ कृताभिषेकामहिषीभोगिन्योन्यानृपःस्त्रियः॥ पत्नी
पाणिगृहीतीचद्वितीयासहधर्मिणी॥५॥ भार्याजायाथपुंभूम्निदाराःस्यात्तुकुटुंबिनी॥ पुरंध्रीसुचरित्रातुसतीसाध्वीपतिव्रता॥६॥ कृतसो
पत्निकाध्यूढाऽधिविन्नाथस्वयंवरा॥ नावयवा रमयंती रममाणा कोपशिला वरआरोहोनितंबोयस्याः पट्टराणी कृताभिषेका विवाहितंप्रथमस्त्री विवाहितद्वितीयस्त्री आयते-
अस्यांजायायास्तद्विजायत्वंयदस्यांजायतेपुनरितिमनुः॥ दारेयंतिभ्रातॄन् पतिपुत्रादिमती २ पतिव्रता ४ कृतानेकविवाहस्यपुंसः प्रथमविवाहितस्त्री ३ स्वयंवृणुते ३

कुलवंती २ कन्या १ अदृष्टरजस्का ३ प्रथमप्राप्तरजस्का २ मध्यमवयस्का २ त्रयंपुत्रादिभार्यायाः सुष्ठुवयसि सुवासिनी स्ववासिनीत्यपिपाठः स्वेषुपुत्रादिषु वस्तुंशीलायस्याः २ धनादीच्छावल्याः २ हिलोल्लु
ज्जाभयेश्लिष्टामदनेनमदेनया॥ अभिसारयते कांतं साभवेदभिसारिकेति॥ स्वैरिणीचां ८ पुत्रैरहितस्त्री पतिपुत्रैरहित विधवा २ सखीचां ३ सौभाग्यवती २ वृद्धस्त्रीनाम चतुरस्त्री २ बुद्धिम

पतिंवरा च वर्याथ कुलस्त्री कुलपालिका॥ ७॥ कन्या कुमारी गौरी तु नग्निकानागतार्तवा॥ स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे॥ ८॥ समाः स्नुषा जनी
वध्वश्चिरंटी तु सुवासिनी॥ इच्छावती कामुका स्याद्वृषस्यंती तु कामुकी॥ ९॥ कांतार्थिनी तु या याति संकेतं साभिसारिका॥ पुंश्चली धर्षिणी बंधक्यसती
कुलटेत्वरी॥ १०॥ स्वैरिणी पांसुला च स्यादशिश्वी शिशुना विना॥ अवीरा निष्पतिसुता विश्वस्ता विधवे समे॥ ११॥ आलिः सखी वयस्याथ पतिवत्नी
सभर्तृका॥ वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती॥ १२॥ शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरंगना॥ आभीरी तु महाशूद्री जातिपुंयोगयोः स
मा॥ १३॥ अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि॥ उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः॥ १४॥ आचार्याणी तु पुंयोगे स्यादर्यी क्ष
त्रियी तथा॥ उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा॥ १५॥ वीरपत्नी वीरभार्या वीरमाता तु वीरसूः॥ जातापत्या प्रजाता च प्रसूता च प्रसूतिका
॥ १६॥ स्त्री नग्निका कोटवी स्याद्दूती संचारिके समे॥ कात्यायन्यर्धवृद्धा या काषायवसनाधवा॥ १७॥ त २ शूद्रस्त्री भिन्नजातीयेशूद्रस्त्री किंवाजाति गवळीण २ वैश्य

जातीयस्त्री २ क्षत्रियपत्नीनामानि स्वयंविद्यापदेशिनी उपेत्यअधीयते ऽस्याः सकाशादित्यु० पुराकल्पेतु नारीणां व्रतबंधनमिष्यते॥ अध्यापनं च वेदानां सावित्रीवचनं तथेति पराशरमाध
वीयेयमः॥ स्वयंव्याख्यात्री आचार्यस्त्री वैश्यस्त्री क्षत्रियस्त्री उपाध्यायस्त्री स्त्रीपुंसलक्षणस्त्री स्तनश्मश्रुचिन्हयुक्त. वीरस्त्री. वीरमाता. प्रसूतस्त्री ४ नग्नस्त्री २ दूतीनामे २ विशेषणत्रयेयुक्ता
कात्यायनी

